# शब्दशक्ति-प्रकाशिका ।

महामहोपाध्याय-
श्रीश्रीमज्जगदीशतर्कालङ्कारभट्टाचार्य-
विरचिता ।

पण्डितधुरीण-
श्रीकृष्णकान्तविद्यावागीशभट्टाचार्यकृत-
टीकयोपेता ।

श्रीजयचन्द्रसिद्धान्तभूषणभट्टाचार्यकृत-
प्रविरलटिप्पनीभूषिता ।

भादुड्युपनामक-
श्रीअतुलकृष्णदेवशर्मणा
बहुभिःपण्डितैः संशोध्य प्रकाशिता
प्रथमं संस्कृता च ।

Price per Copy 3-4-0 ] [ मूल्यं ३।)


Tara Printing Works, Benares.

# कृतज्ञता ।

जगत्यर्थ एवैको विनिमातव्य इति सद्भिर्न बहु मन्यते, यतः सदा सर्वत्र धनैरगण्यैरपि सर्वार्थो नैव साध्यत इति भूयशो दृश्यते । परन्तु यदि स्यात्तु किमप्यनुसन्धित्स्यतां तर्हि तत्र "कृतज्ञतैव" साध्वी विनिमेया बस्त्विति सत्यमुच्यतामिति ।

सटीकशब्दकने प्रथमेऽस्मिन् संस्कारे संशोधने सङ्कलीकरणे आदर्शप्रतिलेखने यत् सिद्धान्तभूषणमहाशयेन श्रमोऽविश्रामं व्यधायि, तत्र त मदीय बन्धुत्वमेवान्वरीरत्सीत्, किन्तु अशेषपण्यानुशासन-सन्नाशयानवसरेणापि विद्वद्धुरन्धरसुन्दरकलेवरचरितेन श्रीश्री-वामाचरणतर्कभूषणमहाशयेन स्नेहमूर्तिचरित्राभ्यां कुमाराभ्यां न्यायाध्ययने तत्पराभ्यामपि महोद्यमाभ्यां विद्याव्यसनाभ्यां श्रीगोपीचन्द्रव्याकरणतीर्थेन श्रीउपेन्द्रचन्द्रव्याकरणतीर्थेन च यत्तत्र तत्रागणितसमयक्षय नि:स्वार्थ क्रम उपर्यकारि, तत् केवल सुचिरं स्मरामि मनसैव कृतज्ञतया स्वया निबद्धोऽस्मि तेषां । नान्यदत्र निमातव्यमिति ।

अपिच—महामहोपाध्यायो देवकल्प श्रीश्रीकैलासचन्द्रशिरोमणिमहाशयस्तथा स श्रीवामाचरणतर्कभूषणमहाशयो नोयाखाली-निवासी श्रीयुक्तभुवनचन्द्रसिद्धान्तचूड़ामणिमहाशयश्च हस्तलिखितादर्शग्रन्थार्पणेनापि साहायकमकरोत्तेन च तेषां कृतज्ञोऽस्मि ।

अत एवोक्त ।—

"पिबन्ति नद्य स्वयमेव नाम्बु,  
न चन्दनो जिघ्रति सौरभं स्वम् ।  
स्वयं न खादन्ति फलानि वृक्षा,  
परोपकाराय सतां विभूतिः ॥" इति ।

विदुषा वशंवदः ।—

श्रीअतुलकृष्णदेवशर्मा ।

## *जगदीशतर्कालङ्कारस्य
## संक्षिप्तजीवनवृत्तं ।

---

प्रायस्त्रिशतवर्षादूर्द्धं नवद्वीपनगर्य्यां जगदीशो मैथिलमिश्रवंशे यादवचन्द्रविद्यावागीशात् पितु सम जनि, यतो दृश्यते जगदीशकृतकाव्यप्रकाशटीकां "काव्यप्रकाशरहस्यं" नाम जीनतस्तस्य कश्चिच्छात्रो न्यायालङ्कारोपाधिको लिखित्वा तदन्ते लिपिसमाप्तौ श्लोकमेकमलिखत् यथा ।—

"शाके रन्ध्राद्रिबाणक्षितिपरिगणिते (१५७९) माघमासे नवम्यां,
पक्षे चैवावलपक्षे ग्रहपतिदिवसे जीवयुग्युग्मलग्ने ।—
न्यायालङ्कारधीरो निजगुरुरचितं पुस्तमेतत् समस्तं,
स्वीय स्वीयाङ्कनस्थो व्यलिखदनलसोऽध्यापनार्थं सुखेन ॥ "

स्वकीयाध्ययनार्थं निजगुरुणा जगदीशेन रचित एतत् काव्यप्रकाशरहस्यमलिखदित्यनेन वर्त्तमानकालात् तस्य जीवितकालस्तथाऽनुमानि त्रिशतवर्षादूर्द्धमिति ।

यादवचन्द्रविद्यावागीशस्य पञ्च पुत्रास्तेषु जगदीशस्तृतीयः, यदा जगदीशः पञ्चवर्षदेशीयस्तदास्य पिता स्वरारूढस्तेन जगदीशादीनां लालनपालनभार षष्ठीदासस्यैवाग्रजस्य स्कन्धमारूढ, पितुर्वियोगादसौ गार्हस्थ्यकृत्यनिर्वाह व्याकुलीभूतः केवलं चैतन्यदेवविग्रहसेवयोपार्जितेनार्थेन दुःखदुःखेन दिनमनयत् । बाल्ये जगदीशोऽतिमात्र दुर्ललित आसीत्, वियोगाच्च पितुरधिकाधिकं दौर्वृत्त्यमनुष्ठातु पटुतरो जात, यवीयसा भ्रात्रा निरस्कृतोऽप्यसौ दुराचरणं नाजहत्, इत्थमष्टादशवर्षदेशीयो जगदीश एकदा पक्षिशावकानाहर्तुं दुरारूढ तालतरुमारुहत्, दैवात्तदा पक्षिडिम्भानन्तु दुर्निषहो विषधरोऽप्येकस्तमध्यास्थात्, जगदीशस्तु यावत् कुलाये हस्तं प्रसारितस्तावदत्युग्रहालाहलज्वालाजालकरालकालकवलः कृष्णसर्प फणामातत्य दंष्टुमुपक्रान्तस्तावच्च तत्कालमतिको निर्भीको द्रागेव दृढमुष्ट्या सर्पग्रीवामाक्रम्य क्रकचायमानायां तालदण्डधारायां निघृष्य छित्वा च सुदूरे न्यक्षिपत्, विधौ प्रसन्ने विपदपि सम्पदमाविष्कर्तुं प्रभवति, भाविमङ्गलस्यैतदेवामङ्गलं सूत्रमपातयत् तरोश्चतस्माच्छनैरवारुहत् ।

ततस्तत्क्षणे समासन्नवर्ती कश्चित् सन्यासी जगदीशस्य निर्भीकत्वमापत्कालिकमातिकत्वञ्च समीक्ष्य तमाहूय मृदुमृदु तिरस्कृत्य न प्रबोध्य च सदुपदेशेनेदृश्या दुर्वृत्तेर्निरवर्तयत्, प्रावर्तयच्चाध्ययन इति

तस्मादेव सन्यासिनोऽध्येतुं यदासौ प्रावर्तत, तदा स कथञ्चिद्वर्णमात्रपरिचयो जीवानपेक्ष इव नाह्नि न रात्रिर्न प्रातर्न सायं विगणय्य हृदा निरन्तर केवलं विद्याभ्यास एव तत्परो बभूव। किमधिक रात्रौ निद्रां विद्रावयितु कुटीरस्तम्भे शिखानिबद्धरज्जुको यदा पठन्नासीनप्रचलायित शिखाविकर्ष प्रपातितस्तदा निद्रां हित्वा तारस्वरेण पठितपाठमावर्तत । निर्धनतया तैल क्रेतुमनीशो शुष्कवंशपत्राणां दिवसं पुञ्जीकृतानामेकैकेनानल प्रज्वालित ग्रन्थवाचनप्रदीपार्थमसाधयत्, इत्थ द्वित्रैरेव वत्सरैर्व्याकरण काव्य कोषञ्च समभ्यस्य शेषमकरोत्।

दुर्वृत्तदशायां सर्वैरेव नवद्वीपवासिभिर्जगदीशो निकर्षसूचकेनावज्ञयेनापभ्रष्टनाम्ना "जगा जगा" इत्येवमाक्रुश्यत, यदात्वपेतचापलो विद्याव्यसनितया प्रथितस्तदा प्रेम्णा सादरसम्भाषणेन "जगु जगु" इत्येव माभाष्यत, केश्चिद्वा जगा इति च।

अथ न्यायशास्त्रमध्येतु स तदानीमसत्प्रसिद्धान्द्विकस्य विदुषां तिलकायमानस्य भवानन्दसिद्धान्तवागीशस्य चतुष्पाठीमविशत्, तत्र तु विद्यार्थिबाहुल्यात् सर्वान् स्वयमध्यापयितुमशक्नुवानो भवानन्दोऽधस्तनपाठान् शिष्यान् समुच्चतरपाठै शिष्यैरध्यापयाञ्चक्रे, तेन हि जगदीश म न पर्यचिनोत्, किन्त्वल्पैरेवाहोभिः स्वकीया तर्कशक्तिरेव जगदीशं तत्पर्यचाययत्।

एकदा अन्तर्वाटिकायामलिन्दे सन्ध्यावन्दनादौ समासीन' सिद्धान्तवागीशो मठे विद्यार्थिनां मिथ. प्रवृत्त शास्त्रार्थभागितमश्रृणोत्, तत्र जगदीश पूर्वपक्षवादी अपरे चोत्तरपक्षवादिन' संलपन्तिस्म, ततो भवानन्द पत्नीमपृच्छत् कस्यायं कलगम्भीर. कण्ठरव श्रूयते, तयोक्तं यस्तु वैदिकपोतकः पूर्वं 'जगा" इति सम्प्रति "जगा जगु" रितिचाभिहितस्तस्येति, तदाकर्ण्य भवानन्द आनन्दनिर्भरेण गद्गदस्वरेणोक्तं अहो धन्योऽहं यस्य ममान्तेवासी—

"आदौ जगा जगुः पश्चात् जगा जगुरतः परं।
अधुना ज्ञानसम्पत्या जगदीशायते जगा ॥" इति

तत्राल्पेनैव दिनेन पाठ समाप्य गुरोर्लब्धतर्कालङ्कारोपाधिक'

पाठयितुमारब्धवान्। शीघ्रमेव तत्राध्यापनागुणाकृष्टा भूरिशश्छात्रा· समवायन्, तदासावन्यत समागतेभ्यो विद्यार्थिभ्यो दीधितिग्रन्थ· स्यापव्याख्यामाकलय्यान्त परिदूनस्तट्टीकां विरचितुमारेभे । तथा च तदादिश्लोकः ।—

प्राच्यैरनुचितविविधक्षोदैः कलुषीकृतोऽप्यधुना ।
दीधीतियुतमणिरेष श्रीजगदीशप्रकाशितः स्फुरतु ॥'

जगदीशो ग्रन्थविरचने प्रवृत्त खलु, परन्तु गार्हस्थ्यवृत्तेरस- म्यक्तया निराकुलेन चेतसा न तन्निष्पादयितुमशकत्, तदानन्य- गत्या विद्याव्यसनेनचाभिभूयमानो जगदीशो धनिकान् शूद्रान् तान्त्रि- कीं दीक्षां प्रदाय शिष्यान् कर्तुमारब्धवान्, तदाकर्ण्यानेक एव शूद्र- कुलीना. सद्गुरुलाभाशया त गुरुत्वेन वरित्वा दत्त्वा च वहूनि द्रव्याणि कृतकृत्यमात्मानममन्यन्त, जगदीशोऽपि शिष्यदत्तवृत्त्या गार्हस्थ्यमनाकुलं साधयन् अपेतान्तरायो निरन्तर ग्रन्थानरचयत् । क्रमशोऽसौ शिरोमणिकृतानुमानदीधिति-तर्क सामान्याभाव-व्याप्त्य- नुगम सिंहव्याघ्र-पक्षतोपाधिवाद-व्याप्त्यनुमानदीधित्यनुमिति-व्याप्ति- पञ्चक-पूर्वपक्ष-सिद्धान्तलक्षण-व्यधिकरणधर्मावच्छिन्नाभावावच्छे- दकत्वनिरुक्ति-विशेषव्याप्ति-व्याप्तिग्रहोपाय-सामान्यलक्षणा-परामर्श- केवलान्वयि - केवलव्यतिरेक्यन्वयव्यतिरेकि-बाधासिद्धि - सत्प्रतिप- क्षानुपसंहार्यवयव-हेत्वाभाससाधारण- सव्यभिचारिप्रभृतिग्रन्थानां टिप्पनीं, गङ्गेशोपाध्यायकृतानुमानमयूखग्रन्थस्य भाष्य, प्रशस्तपाद· कृतद्रव्यभाष्यटिप्पनी, शिरोमणिकृतन्यायलीलावतीदीधितिग्रन्थस्य टीकाञ्च विरच्याद्भुतविचारशक्त्या पण्डितजगदमोहयत् ।

नासौ केवलं टीकाग्रन्थानेव विरच्य व्यरमत्, परन्तु "तर्कामृतं" शब्दशक्तिप्रकां च मूलग्रन्थं निर्माय विश्वविलक्षणक्षमतया क्षितौ प्रख्यातिमाख्यापयत्, जागदीशग्रन्थानां "शब्दशक्तिप्रकाशिकैव" सार एको ग्रन्थ , यदि नाम जगदीशो ग्रन्थानन्यान्नाकरिष्यदपि, तदापि एकयैव शब्दशक्तिप्रकाशिकया चिराय स्वरारूढोऽपि यावदाचन्द्र- तारक धराशरणेऽजीविष्यत् । अत एवोच्यते लोकैः ।—

"जगदीशस्य सर्वस्व शब्दशक्तिप्रकाशिका" इति । जगदी- शस्य द्वौ पुत्रौ रघुनाथो रुद्रेश्वरश्च परमपण्डितौ बभूवतुः, रघुनाथ स्तु 'सांख्यतत्त्वकौमुदी' मालम्ब्य "सांख्यतत्त्वविलासनामकं" ग्रन्थमलिखत् इति ।

श्रीजयचन्द्रशर्मा ।

# कृष्णकान्तविद्यावागीशस्य ।

## संक्षिप्तजीवनचरितं ।

---

कृष्णकान्तस्तु प्रख्यातकीर्त्तेः रामनारायणतर्कपञ्चाननस्यान्तेवासी वैदिको ब्राह्मणः, अद्याप्येतद्वंश्या नवद्वीपगङ्गापरपारे पूर्वस्थल्यां निवसन्ति, असौ द्वात्रिंशदधिकसप्तदशशाके शब्दशक्तिटीकां व्यरचयत्, तथाहि—तट्टीकाशेषे तेन लिखितं, एतेनैव तस्य जन्मकालोऽनुमीयतां, यथा—

"शाके रामाक्षिशैलक्षितिपरिगणिते (१७३२) कर्कटे याति भानौ,
विशाहे विश्वनाथार्चितपदयुगलं श्यामलं मोक्षवीजं ।
ध्यायन्नध्यापकानां निखिलपदपदार्थादिचिन्तापहन्त्री,
तेने श्रीकृष्णकान्ताह्वय इह सुकृती टिप्पनीं गूढभावां ॥

पण्डितप्रवरोऽयं न्यायशास्त्रं स्मृतिशास्त्रञ्च सममधिजगे, समदर्शयच्च विरच्य शब्दशक्तिटीकां शिरोमणिकृतपदार्थतत्त्वटीकां न्यायरत्नावलीं जीमूतवाहनकृतदायभागटीकाञ्चोभयस्मिन्नेव शास्त्रे पाण्डित्यमसाधारणं । काव्यशास्त्रेऽप्ययमसौ निपुणतर आसीत् तदनुमीयते, यतस्तत्कृतानि "गोपाललीलामृत" "चैतन्यचन्द्रामृत" कामिनीकामकौतुकञ्च त्रीणि काव्यानि पठतां चेतसि मुदमादधति, अस्य तु पाण्डित्ये वैमत्यलेशोऽपि केषाञ्चिदपि यद्यपि नास्ति, किन्तु पाण्डित्यविरुद्धमहयुत्वमेनं किञ्चिदकुत्सयत्, तथाहि यदामुं मृत्युशयनमधिशयानं गङ्गातीरमानीतं बन्धवोऽन्वशोचन्, तदाप्यनेनोक्तं स्वकर्मैकस्पर्धं—यथा—

अधिगगनमनेकास्तारका दीप्तिभाजः
प्रतिगृहमपि दीपा दर्शयन्तु प्रभुत्वं ।
दिशि दिशि विलसन्ते क्षुद्रखद्योतपोताः
सवितरि परिभूते किं न लोकैर्व्यलोकि ॥ इति *

श्रीजयचन्द्रशर्मा ।

---

* एतयोश्चरितं किंवदन्ती नवद्वीपमहिमवङ्गभाषापुस्तकञ्चालम्ब्य लिखितमिति ।

# नामप्रकरणस्य शुद्धिपत्रं ।*

———o———

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| कारिकार्थो | कारिकार्थे | ६ | १३ |
| शब्दो | शाब्दो | ६ | १६ |
| रधिक | रप्यधिक | ७ | ६ |
| नैव | नेव | ८ | १ |
| शब्द | शाब्द | ८ | १५ |
| लभ्यस्येति | लब्धस्येति | १० | ५ |
| लक्षणो | विलक्षणो | १० | १४ |
| प्रतिबन्ध्यता | प्रतिबध्यता | ११ | १८ |
| पत्ति | पत्ति | १३ | १४ |
| असिद्धे | अमिद्धे | १४ | १५ |
| योग्यताशिष्ट | योग्यताविशिष्ट | १४ | १६ |
| चक्षुरादौ | चक्षुरादौ च | १६ | २ |
| मित्यन्वय | मित्यत्रान्वय' | १७ | १५ |
| दपद | पद | २१ | ५ |
| तिरीत्या | त्यादिरीत्या | २१ | ५ |
| कदाचिदूपस्थिति | कदाचिदुपस्थिति | २४ | १६ |
| शब्दे | शाब्दे | २५ | ५ |
| प्रमात्वापत्ते | अप्रमात्वापत्ते | २५ | १९ |
| निश्चय | निश्चय | २६ | २३ |
| कारणकत्वेन | कारणत्वेन | २७ | २ |
| निरुप्य | निरूप्य | २७ | ८ |
| निरुपक | निरूपक | २७ | १० |
| उपस्थितवेक | उपस्थिताविक | २६ | ५ |
| अनुभाव | अनुभव | ३० | ५ |

* अस्माकानाद्दृष्टिदोषाद्याशुद्धिर्जाता सा यावच्छक्य शोध्यते, किन्तु मुद्रणदोषादयानि क्षुद्राक्षराण्यस्फुटानि रेफानुस्वारेकारादीनि वाचकैरनुमाय शोध्यानीति ।

| अशुद्धं | शुद्धं | पृ० | पं० |
|---|---|---|---|
| बाधकुत् ... ... | बोधकुत् ... .. | ३१ | ४ |
| शब्दाप्रयोज्य .. . | शब्दप्रयोज्य .. | ३२ | ७ |
| इत्य आह ... .. | इत्यत आह .. ... | ३२ | २० |
| बोधकत्वात्तत्र .. . | बोधकत्वात्तत्र .. ... | ३२ | २५ |
| काह ... | आह ... .. | ३४ | १५ |
| समास्वान्तर्गत .. | समासान्तर्गत. . ... | ३४ | २१ |
| स्थिति ... | स्थिति .. | ३६ | ७ |
| निरूक्त .. ... | निरुक्त .. .. | ३६ | १० |
| स्वाव्यवीहत .. .. | स्वाव्यवहित .. . | ३८ | २० |
| व्यवछिन्नादि ... ... | व्यवच्छिन्नादि . . | ४४ | ३ |
| तत्वेन ... . | तत्त्वेन. . . ... | ४५ | २ |
| निश्चयत्वने .. .. | निश्चयत्वेन ... ... | ४७ | १० |
| गणकोदीनां .. . | गणकोषादीनां ... . | ४८ | १४ |
| शलि ... ... | शालि . | ४६ | २५ |
| लक्षणया . .. | लक्षणाया . | ५१ | २ |
| भअर्थे . ... | घअर्थे . | ५३ | १२ |
| स्थलयि . . | स्थलीय .. | ५५ | २० |
| चव्याप्त . | चाव्याप्ति . . | ५५ | २२ |
| रावच्छिन्न .. . | रानवच्छिन्न .. | ५६ | ४ |
| षष्ठ्यन्त .. | षष्ठ्यन्त .. | ५८ | २८ |
| निष्याद्यत्वे . .. | निष्पाद्यत्वे . | ६१ | २० |
| शोभनं .. | शोभनं . | ६२ | २२ |
| भावे न .. .. | भावेन . ... | ६३ | २२ |
| सम्बधाव ... .. | सम्बन्धाव . | ६४ | १९ |
| सत्तादिति ... .. | सत्त्वादिति .. . | ६६ | १४ |
| युष्मदस्मदो... ... | युष्मदस्मदो ... .. | ६८ | १६ |
| इत्याति ... .. | इत्यादि ... .. | ६९ | ११ |
| प्रत्यक ... .. | प्रत्येक ... ... | ६९ | १३ |
| माहा .. ... | माह ... ... | ७२ | १२ |
| प्रकारकाज्ञान ... | प्रकारज्ञान ... ... | ७२ | २३ |

| अशुद्धं | शुद्धं | पृ० | पं० |
|---|---|---|---|
| च्छेदक | च्छेदकक | ७२ | २५ |
| पदामित्यादौ | पदरूपमित्यादौ | ७६ | २१ |
| कर्त्तृकैरिति | कर्तृकेति | ८० | २१ |
| निरूक्त | निरुक्तं | ८१ | १६ |
| ग्रहाकत्वात् | ग्राहकत्वात् | ८३ | ६ |
| पदार्द्ध | परार्द्ध | ८४ | ५ |
| योगिकत्व | यौगिकत्व | ८४ | १४ |
| रूढ्यर्थ | रुढ्यर्थ | ,, | ,, |
| योगिकार्थ | यौगिकार्थ | ८४ | १५ |
| रजकं | रजतं | ८४ | २६ |
| रूढ़ानामेव | रूढ़नामैव | ८६ | ४ |
| लभ्यते | लभ्यते | ८६ | ५ |
| रूढ़ानामेव | रूढ़नामैव | ८६ | २० |
| शंकतेस्य | संकेतस्य | ८६ | ६ |
| अविधत्ते | अभिधत्ते | ,, | १० |
| शकेत | संकेत | ,, | ११ |
| ,, | ,, | ,, | १२ |
| ,, | ,, | ,, | ,, |
| ,, | ,, | ,, | २० |
| ,, | ,, | ,, | २१ |
| ,, | ,, | ,, | २३ |
| गोत्वकर्मता | गोत्वादिकर्मता | ९० | ८ |
| गहित्वेन | गाहित्वेन | ९३ | २६ |
| प्रामाणास्य | प्रामाण्यस्य | ९४ | २ |
| विरूद्धाभ्यां | विरुद्धाभ्यां | ९६ | १० |
| स्यति | स्येति | ९६ | २२ |
| न्धने | न्धेन | ९६ | २३ |
| सत्तेन | सत्त्वेन | ९६ | २३ |
| प्रकारेत्वस्य | प्रकारत्वस्य | ९९ | ११ |
| लक्षार्थ | लक्ष्यार्थ | ,, | २० |
| न व्याभिचारः | व्यभिचारः | १०१ | ४ |

| अशुद्धं | शुद्ध | पृ० | पं० |
|---|---|---|---|
| तयोविशेष्य | तयोर्विशेष्य | १०३ | १६ |
| कत्व | कत्वे | १०४ | ३ |
| ज्ञनस्य | ज्ञानस्य | १०४ | १९ |
| बोधत्वाच्छिन्नं | बोधत्वावच्छिन्नं | १०५ | १ |
| विशिष्ठस्य | विशिष्टस्य | १०७ | ११ |
| धर्म्मव | धर्म्मवत्त्व | १०८ | २ |
| बोधम्भवा | बोधसम्भवा | १०८ | ५ |
| संस्थानव्यङ्ग्य | सस्थानाव्यंग्य | १०८ | २४ |
| प्रवोज्य | प्रयोज्य | १०६ | २ |
| पधित्वे | पाधित्वे | १०६ | ३ |
| शक्ति | न शक्तिः | ११० | १ |
| अनुभवे न | अनुभवेन | ११० | ९ |
| भावे | भवे | ११० | ३ |
| भाना | भान | ११० | ८ |
| शाब्दते | शाब्दमते | १११ | १ |
| ह्लामोदि | ह्लोमादि | ,, | ४ |
| मितप्रत्यचे तत्रे | मितिप्रत्यक्षे तत्र | ११२ | १७ |
| रूपरामर्श | रूपपरामर्श | ,, | २१ |
| स्यैवति | स्यैवेति | ११३ | ९ |
| सम्भावात् | सम्भवात् | ,, | १३ |
| निरूक्त | निरुक्त | ११५ | २९ |
| ज्ञानमाधारण | ज्ञानमसाधारण | ११७ | ३ |
| लाघावाच्च | लाघवाच्च | ,, | ४ |
| दिना | दीनां | १२० | ८ |
| सशायकत्वं | सांशयिकत्वं | १२४ | १४ |
| दुःखानाधि | दुःखानधि | ,, | २२ |
| दुःस्वं | दुःख | १२५ | ७ |
| अभिलासोप | अभिलाषोप | ,, | १८ |
| ,, | ,, | ११६ | ३ |
| गमाना | गमना | १२७ | १५ |
| अभिलासोप | अभिलाषोप | २२७ | १८ |

| अशुद्ध | शुद्ध | पृ० | प० |
|---|---|---|---|
| अभिलासोप ... | अभिलाषोप | २२७ | २० |
| न चति. | क्षतिः | १२८ | ६ |
| माहा | माह ।— | ,, | २४ |
| सुखस्य | मुखस्य | १२९ | १९ |
| अनुभविक | आनुभविक | १३१ | १६ |
| विशिष्ठान्य | विशिष्टान्य | १३२ | १३ |
| लक्षित्वे | लक्षिते | १३४ | २० |
| घटत्वदि | घटित्वादि | १३६ | ४ |
| वच्छिक्त्वे | वच्छिन्नत्वे | १३६ | २३ |
| मुन्नतव्यं | मुन्नेतव्यं | ,, | २६ |
| निरुपक | निरूपक | १३९ | १३ |
| निरुपक | निरूपक | ,, | १७ |
| लीक्षित | लक्षित | १४१ | १६ |
| च्छेद्त्व | च्छेद्कत्व | १४४ | ५ |
| विष्णादि | विष्णवादि | १५१ | १८ |
| विष्णादि | विष्णवादि | ,, | १६ |
| रूयत्वं | रूपत्वं | १५३ | ७ |
| एावप | एवाप | ,, | १७ |
| गुरूतया | गुरुतया | १५५ | २२ |
| सन्धिता | सम्बन्धिता | १५६ | ११ |
| उच्चारित्वं | उच्चारितत्वं | ,, | २२ |
| नर्जकत्वं | नर्जकत्वात् | १५६ | २ |
| नर्जना | नर्जकत्वा | ,, | ६ |
| विशिष्ठ | विशिष्ट | ,, | १० |
| वाक्यस्यापीति | वाक्यमपीति | १६० | ९ |
| अन्वयापत्ते | अनन्वयापत्तेः | ,, | २० |
| तादृश | तादृक् | १६१ | ११ |
| व्युत्पन्नन्वात् | व्युत्पन्नत्वात् | ,, | २४ |
| हुम्फट् | हुम्फडादि | १६४ | २ |
| ततो लक्षकादूभिद्यते | ततो भिद्यते | १६५ | ३ |
| फाड़िति | फड़ादीति | ,, | ५ |

| अशुद्ध | शुद्धं | पृ० | पं० |
|---|---|---|---|
| अतिरिक्ताया | ० . ... | १७६ | २ |
| पङ्कजा . | पङ्का . | १८६ | १५ |
| स्थाप्यर्था . | स्थाप्यार्था ... | १६० | ४ |
| पङ्कजादी ... | पङ्कजन्यादी | १९४ | २० |
| कर्तृपदयो ... ... | कर्तृपद्मयो . | १६५ | १२ |
| वर्तमानन्वयो . | वर्तमानत्वयो . | १६५ | १४ |
| पङ्कजा ... .. | पङ्का .. | १९७ | १ |
| डप्रयार्थे . ... | डप्रत्ययार्थे . | १६७ | १३ |
| पङ्कजादि .. .. | पङ्कादि ... . | १६७ | १४ |
| कोषादाव .. ... | कोपाव .. | १६७ | २५ |
| प्रतिबन्धकत्वे ... | प्रतिबन्धकत्वं ... ... | १६६ | ८ |
| रन्वय ... . | रनन्वय ... ... | २०४ | १ |
| तद्विषयिता ... ... | द्विषयिताव्यापक विषयिता . | २०५ | ४ |
| धर्म ... ... | धर्मे .. | २०७ | ८ |
| यद्यपि .. ... | यदपि ... . | २०८ | २ |
| यद्यपीति ... .. | यदपीति | २०८ | १४ |
| पङ्कजनिकर्तृ .. ... | पङ्कजननकर्तृ | २०८ | १४ |
| प्रवत्येव . ... | प्रत्येव ... | ११० | ७ |
| प्रतीयते ... . | प्रतीयेत . . | २१० | १० |
| आदितः ... ... | आहत्य ... ... | २१३ | ११ |
| नान्यत्रेति ... . | अन्यत्रेति . | ११३ | १६ |

इति नाम प्रकरणस्य शुद्धिपत्रं समाप्त ॥ १ ॥

# समासादेः शुद्धिपत्रं ।

| अशुद्धं | शुद्धं | पत्रे | पङ्क्तौ |
|---|---|---|---|
| त्वादीत्या | त्वादिरित्या | ६ | ११ |
| ध्यायन्त | ध्यान्त्य | ५ | २ |
| न अधिकरणं | न अधिकरणा अनधिकरण | ६ | ६ |
| व्यूत्पन्न | व्युत्पन्न | ६ | २४ |
| जनकत्व | कनकत्वं | ७ | १० |
| घटक इति | घट केति .. | ७ | २४ |
| इत्यदि | इत्यादि . | ८ | ४ |
| वितत्यि .. | वितीत्या | ११ | २२ |
| लक्ष्यस्य . | लक्षितस्य ... ... | १२ | ७ |
| लक्ष्ये | लक्ष्ये ... ... | ,, | १५ |
| परन्विति ... | परन्त्विति . | १४ | १६ |
| बोधे | बोधे | ,, | २२ |
| तुल्यार्थहा | तुल्यार्थकत्वहा ... | १५ | २० |
| दुर्घट ... | दुर्घटा .. | ,, | २४ |
| शिष्ठे | शिष्टे ... | १६ | १४ |
| ,, ... | ,, ... | ,, | २५ |
| तथर्द . ... | तदर्थं ... | ,, | २६ |
| निविष्ठे | निविष्टे ... | २३ | १३ |
| नीलपीत .. .. | नीलपीते ... ... | ,, | २१ |
| प्रदशन .. | प्रदर्शनं | ,, | २४ |
| निविष्ठ ... | निविष्ट ... | २४ | १८ |
| वाहो | राहो ... | २६ | २६ |
| वृत्यु | वृत्त्यै . | २७ | २७ |
| द्विगु | द्विगुं .. ... | २८ | १ |
| नामो . .. | पदो . ... | ,, | १७ |
| वैशदार्थ ... ... | वैशद्यं ... ... | ,, | २७ |
| गाम्भी .. | गाम्भा .. ... | २६ | ८ |

| अशुद्ध | शुद्ध | पृ० | पं० |
|---|---|---|---|
| ॥ ३ ॥ | ॥ ३५ ॥ | ३० | ३० |
| तद्धिता | तद्धिता | ३१ | ८ |
| सन्भवात् | सम्भवात | ३२ | २३ |
| कैम | कर्म | ४२ | १२ |
| नखि | नील | ४६ | २० |
| विभार्यां | विन्नार्यां | ४८ | ३० |
| त्राक्लित | त्राक्लृत | ४६ | ८ |
| समर्था | असमर्था | ५३ | १३ |
| दंष्ठव्या | दंष्टव्या | ५५ | ६ |
| जन्वताया | जन्यताया | ५५ | २३ |
| व्रीहिबो | व्रीहिबों | ५६ | २६ |
| स्वसंख्येति | स्ववृत्ति संख्येति | ६१ | २१ |
| बोधत्वं | बोधकत्वं | ६४ | १६ |
| मर्षत्वा | मर्षकत्वा | ५६ | १३ |
| सुबन्तेति | सुबन्तस्येति | ६८ | १४ |
| हाराथा | हारायाह | ७१ | २६ |
| स्तद्गुण | स्नदतद्गुण | ७३ | ८ |
| ताद्रूण्यण | ताद्रूप्यण | ७४ | २२ |
| सासन | शासन | ७७ | २७ |
| दृष्ठ | दृष्ट | ८२ | १७ |
| मवे | मेव | ८३ | २० |
| पुंस्त्व | पुंस्त्वं | ८५ | १ |
| विति | इति | ८८ | २८ |
| न्वागमा | न्वागथा | ६० | १३ |
| व्याप्त्ये | व्याप्ते | ६० | २० |
| श्रत् | स्रत् | ६१ | १३ |
| श्रंसते | स्रंमते | ६१ | ६४ |
| कास्य | कस्या | ,, | १८ |
| लेति | लस्येति | ,, | २२ |
| तरब्द | तरशब्द | ६३ | २६ |
| रुढ़ा | रूढ़ | ६५ | ६ |

| अशुद्धं | शुद्धं | पृ० | पं० |
|---|---|---|---|
| यात्वाते | यत्त्विति | ६७ | ८ |
| समाह | आह | ६७ | २७ |
| निरूच्य | निरुच्य | १०० | १२ |
| पल्लव | पल्ल | १०४ | १५ |
| प्रभवाः | प्रभव. | १०५ | ६ |
| प्रभवं | प्रभव | ,, | १८ |
| ऽयनुवन्धा | अनुवन्धाः | १०६ | ६ |
| शुरनाङ् | श्रुरनाङ् | ,, | २२ |
| दक्ष | दक्षा | १०६ | २० |
| समार्था | समर्थाः | १११ | २ |
| नादृशी | तादृशी | ,, | २६ |
| स्पाप्य | स्थाप्य | ११२ | १ |
| नमा | नाम | ११३ | ३ |
| अयाथा | अन्यथा | ,, | २१ |
| सुप् | सुव् | ११६ | १३ |
| रुयच्ते | रुच्यते | १२० | १५ |
| क्षुत | श्रुत | १२६ | २६ |
| प्रवत्त | प्रवर्त | १२७ | ६ |
| स्तत् | स्तत्तत् | १३० | १९ |
| द्राव्ये | द्रव्ये | १३२ | २१ |
| विष्ठ | विष्ट | १३३ | ७ |
| सेचके | सेचक इ | १३६ | २३ |
| भत | भूत | १३६ | ३२ |
| पत्रा | पुत्रा | १४० | ५ |
| तदात्मये | तादात्म्ये | १४३ | ५ |
| धिन्न | भिन्न | ,, | ११ |
| निरूच्य | निरुच्य | ,, | १३ |
| धायकेति | धायकं वेति | १४४ | २६ |
| भागाव्य | भागव्या | ,, | ६६ |
| वाध्य | बोध्य | १४५ | १२ |
| चम्वधे | सम्वन्धे | १५१ | ६ |

| अशुद्धं | शुद्धं | पृ० | पं० |
|---|---|---|---|
| पात्विति | पात्तेति | ,, | २७ |
| इत्याध्या | इत्यध्या | १५६ | २१ |
| विरोधा | वाधितत्वा | १५८ | ६ |
| देश | देशे | १६० | १५ |
| चाय | चार्य | ,, | २१ |
| शशक्य | शक्य | १६६ | २६ |
| विर्षाविणी | विषयिणी | १६७ | १० |
| जीवृज्जन | नीवृज्जन | १७३ | १६ |
| व्यांवृत्ति | व्यावृत्ति | ,, | २४ |
| कान्वम | कान्वय | १७६ | २ |
| तराडुला | तण्डुला | १८० | ५ |
| ग्रन्थिगन्थ्यो | ग्रन्थिग्रन्थ्यो | ,, | ७ |
| एवमग्रऽपीत्यपीति | एवमग्रेऽपि । इत्योऽपीति | १८१ | २३ |
| नावश्यक | नावश्यकत्व. | ,, | २६ |
| शक्ति | सक्ति. | १८२ | १४ |
| धर्मिणोः | धर्मिणो | १८६ | २४ |
| अपेक्ष्यते | अपेक्षते | ,, | ,, |
| गतिश्चिन्ता | गतिश्चिन्त्या | १८६ | १० |
| वाचको | प्रत्यायको | १६१ | २० |
| स्यति | स्येति | १६२ | २६ |
| वक्तृनिष्ठेत्यादि | बक्त्रभीत्यादि | १६७ | १४ |
| विषयित्वं | विषयत्व | २०२ | १ |
| अक्षण | अक्षणा | २०६ | १२ |
| सङ्काच | सङ्कोच | ,, | २३ |
| सहागत | सहगत | २१० | २५ |
| व्याहतया | व्याहतायाः | २११ | २२ |
| तादशा | तादश | २१३ | १६ |
| न्तदृष्ट | न्तमपिदृष्ट | २४१ | ११ |
| दुग्धासु | दुग्धासु | २४२ | १५ |
| शापादे | शबादे | २४७ | २२ |
| स्वेतर | स्वेतरा | २४६ | १ |

| अशुद्धं | शुद्ध | पृ० | प० |
|---|---|---|---|
| सिद्धत्व . | सिद्धत्वा ... .. | २५२ | १३ |
| लक्षता . . | लक्ष्यता . | २५६ | २४ |
| विशेषणीयात ... | विशेषणीयेति . | २६१ | २७ |
| श्चिन्तनीय ... . | श्चिन्तनीयं .. | २६२ | २४ |
| नापत्य ... | नापत्य . ... | २६३ | २० |
| सत्न ... ... | सत्त्व ... ... | ,, | २६ |
| दुक्त . .. | द्युक्त | २६८ | १९ |
| स्वेष्टेति | स्वेष्टस्येति | २६९ | २१ |
| निष्ठा . | निष्ठा ... ... | २७३ | १६ |
| इत्यादि ... | इत्यादे | २७३ | १६ |
| तत्पर्या ... | तात्पर्या . . | २७६ | १५ |
| इतिः ... . | इति . . | ,, | २६ |
| पकादौ . | पाकादौ . . | २८० | १५ |
| अत एवेति .. | अत इति | २८४ | २७ |
| रिक्तस्य . | रिक्तरूपस्य. . | २९२ | ३२ |
| काय . .. | कार्ये . | २९२ | २४ |
| चित्रै . | चित्रे | २९४ | ५ |
| चवेति ... | वेति | ३०३ | २७ |
| पाटः .. | पाठ ... | ३०६ | ११ |
| स्वार्थ . .. | सार्थ(?) .. ... | ३११ | ९ |
| लप्स्यत | लप्स्यत ... | ,, | ५ |
| स्वार्थ . | सार्थ(?) ... | ,, | २० |
| तिडन्यः . . | तिङन्यः .. ... | ३१२ | ४ |
| उक्तं . .. | उक्त .. ... | ३२१ | २४ |
| खसु ... ... | स्वसु ... ... | ३३० | १७ |
| धर्मात्रि . ... | धर्मात्रि ... ... | ३३८ | २२ |
| सान्ध्य | सान्ध्य ... ... | ३४४ | ८ |
| अनुराधा' . | अनुराधा ... ... | ३५० | ७ |
| तिष्यः पुष्यौ ... ... | तिष्यपुष्यौ ... ... | ,, | ,, |

॥ * ॥ इति समासादेः शुद्धिपत्रं समाप्तं ॥ * ॥

# सूचीपत्रम् ।



इति समासादि सूचीपत्रं समाप्तं ॥

श्रीश्रीदुर्गाशरणं ।

॥ श्रीश्रीगणेशाय नमः ॥

# शब्दशक्तिप्रकाशिका ।

———o———

## तर्के तन्त्रञ्च विदुषा, विदुषां तोषकारिका ।
## क्रियते जगदीशेन, शब्दशक्तिप्रकाशिका(१) ॥१॥

॥ टीका ॥

योगेश! क्व गतं चिरं हिमगिरेः शृंगे कुटीरे प्रिये!
योगार्थं किमुतास्ति कोँचरमणी तत्रेति सम्भाषणम् ।
श्रुत्वा हाससमन्वितं गिरिसुता-गौरीशयोर्मेनका,
तत्रास्तीति वदन् सलज्जहृदयो माम्पातु लम्बोदरः ॥ १ ॥
न्यायालंकारयुक्तं त्रिभुवनजनक श्रीपतीशेन जुष्ट,
तुष्ट धीरेषु रुष्टं सततमविदुषां श्यामलं सामगीतं ।
ख्यातं तात नितान्त सदयमसदृशां मादृशां साधुसंज्ञं,
श्रीयुक्त चात्र कालीचरणमरच्चयं ग्रन्थमादौ प्रणम्य * ॥ २ ॥

---

॥ टिप्पनी ॥

(१) शब्दशक्तीति शब्दस्य शक्तिः सामर्थ्यं, तत्प्रकाशिकेत्यर्थः। तेन ग्रन्थस्य लक्षणादिप्रकाशकत्वेऽपि न क्षतिः। ईश्वरेच्छारूपशक्तिपरत्वे तु लक्षणादेरप्रतिज्ञातत्वेनाग्रे तत्प्रकाशकत्वे ग्रन्थस्यानुचित स्यात्। अस्मन्मते तु लक्षणादेरपि बोधसामर्थ्यतया प्रतिज्ञातत्वेनाग्रे-तत् प्रकाशनेऽप्युचितमेवेति भावः।

---

* कालीचरणं भगवतीपदं कीदृश? न्यायालकारयुक्तं, समुचिता लकारभूषितं, इत्थं सर्वविशेषणं योजनीयं। पक्षान्तरार्थस्तु स्पष्टः।

ब्रह्म-श्रीकृष्णकान्तात्मकसुतयजन-प्रोल्लसत्पादपद्मा,
सानन्दानन्दमन्दस्मितमिलितवचो भाषणा ध्वस्तपापा ।
किञ्चित् क्रोधोत्थतापाहतरिपुकलितानिष्टचेष्टादिदोषा,
शिष्टा खर्वा विशिष्टा प्रभवतु जननी तारिणी मे नमस्या ॥ ३ ॥
न्यायार्थे स्थितिसृष्टिसंहृतिविधेर्हेतुं स्वकृत्या युतान् ,
धीरानुच्चपद नयन्तमयुतान् दुर्बुद्धिकान् सूत्रतां ।
वेदाख्यानसमुद्धृताखिलधरादित्यं महान्त मुदा,
श्रीलश्रीजगदीशमत्र कमलाधीनं नमस्याम्यहं ॥ ४ ॥
न्यायसंसारपाथोधि-मग्नोपासकतारकं ।
रामनारायणं वन्दे, तर्कपञ्चाननं गुरुम् ॥ ५ ॥
धीरश्रीकृष्णकान्तेन, विद्यावागीशसञ्ज्ञिना ।
व्याख्यायते सतां तुष्ट्यै, शब्दशक्तिप्रकाशिका ॥ ६ ॥
प्रणम्य भूयो विनयेन मान्यान्, धीरान् समस्तानिति वेदयामि ।
अशेषमात्सर्यमिदं विहाय, प्रदर्शनीयं सुविभाव्य दूष्यम् ॥ ७ ॥

मंगलाचरणपूर्विका निजकृतकारिकावलीर्व्याख्यातुं प्रेक्षावत्प्रवृत्तये शिष्यशिक्षायै च प्रयोजनाभिधेयसम्बन्धप्रतिपादक पद्यमादौ निबध्नाति तर्कमित्यादि । तर्को वितर्क आपत्तिरितियावत्, तन्त्रं सिद्धान्तः तथा च पूर्वपक्षं सिद्धान्तञ्च जानता इत्यर्थः । अथवा तर्कं तर्कशास्त्रं व्याकरणादिकातन्त्रञ्च्वा जानता इत्यर्थः । केचित्तु तर्कमित्यस्य तर्कसम्बन्धीत्यर्थः वृद्धेरनित्यत्वात्, तथाच तर्कशास्त्रसम्बन्धिनं सिद्धान्तं जानता इत्यर्थ इत्याहुः। तन्मन्दम्, तथा सति समुच्चायकचकारासगतेः वृद्ध्यभावस्य महाजनप्रयोगानुसारित्वाच्च । इदमपि स्वकर्तव्यग्रन्थप्रामाण्यसूचकतया परम्परया ग्रन्थाध्ययने शिष्यप्रवृत्त्युपयोगि, अन्यथा ग्रन्थकर्तुर्वैदुष्यसन्देहे तद्ग्रन्थेऽपि अप्रामाण्यसंशयात्तदध्ययने शिष्याणां प्रवृत्तिरेव नोत्पद्यत इति भावः । ग्रन्थविशेषणमाह विदुषामिति—विदुषां मुमुक्षूणां तोषकारिका तत्त्वज्ञानप्रयोजिका । एतेन प्रयोजनमभिहितं, यथाश्रुतन्तु न संगच्छते, तथा सति-

॥ २ ॥ ग्रन्थारंभे विघ्नविघाताय समुचितां शब्दमयीं देवतां ग्रन्थकृत् स्मरति स्म—

---

प्रयोजनानभिधाने ग्रन्थकर्तुर्न्यूनतापत्तेः। सन्तोषविशेषस्य प्रयोजनत्वसम्भवेऽपि प्रेक्षावत्प्रवृत्त्यनुद्देश्यत्वात्। न तत् शास्त्रं, यस्य पाठे प्रेक्षावान् न प्रवर्तेत इति निन्दाश्रुतेः शिष्यप्रवृत्त्यनुपपत्तेश्च। सम्बादिप्रवृत्तौ इष्टसाधनत्वनिश्चयस्यैव हेतुत्वात्। शब्दशक्तिप्रकाशिकेति—शब्दस्य या शक्तिर्बोधसामर्थ्यं, तत्प्रकाशिकेत्यर्थः। तेनैतद्ग्रन्थस्य लक्षणादिप्रकाशकत्वेऽपि न क्षतिः। एतेन शब्दशक्तेरभिधेयत्वं शब्दशक्ति—ग्रन्थयोः प्रतिपाद्यप्रतिपादकभावरूपसम्बन्धवत्त्वञ्चाभिहितम् ॥ १ ॥

(२) ग्रन्थारम्भ इति—वाक्यसमूहस्य आनुपूर्वीविशेषावच्छिन्नस्य वा ग्रन्थस्याद्यकृतिदशायामित्यर्थः। विघ्नविघातायेति—ग्रन्थसमाप्तिप्रतिबन्धकदुरदृष्टनाशायेत्यर्थः। एतेन विघ्नध्वंस एव मंगलस्य फलं, न तु समाप्तिरिति व्यञ्जितम्। न च समाप्तिरेव तत्फलमिति किं नोपेयते, मंगलं विनापि नास्तिकादिग्रन्थसमाप्तिदर्शनात्, कृतमंगलाचरणस्यापि ग्रन्थस्य क्वचित् समाप्त्यदर्शनात् व्यभिचारात् समाप्तिं प्रति तस्य हेतुत्वासम्भव इति चेन्न, यत्र हि कृतेऽपि मंगले न समाप्तिस्तत्रागत्या विघ्नप्राचुर्यं कल्प्यते, यत्र च मंगलं विनापि समाप्तिस्तत्र जन्मान्तरीयमेव मंगलं कल्प्यत इति वाच्यं, विघ्नध्वंसद्वारा मंगलस्य समाप्तिं प्रति हेतुत्वकल्पनामपेक्ष्य विजातीयविघ्नध्वंसं प्रत्येव तस्य हेतुत्वकल्पनाया लाघवादावश्यकत्वात् न्याय्यत्वाच्च। यत्र दुरदृष्टमेव नास्ति तत्रमंगलस्यादृष्टजनकस्यैव स्वीकारात्। भवन्मतेऽपि विघ्नध्वंसद्वारा तत्र तस्य हेतुत्वासम्भवाच्च। आशुविनाशिनो मंगलस्य समाप्तिं प्रति साक्षाद्धेतुत्वासम्भवेन विनिगमनाविरहस्यासम्भवाच्च। कृतमंगलस्य ग्रन्थस्य क्वचिदसमाप्तिश्च बुद्धिप्रतिभादिरूपकारणान्तरविरहादेव। नास्तिकादीनाञ्च समाप्तिप्रतिबन्धकीभूतदुरदृष्टमेव न कल्प्यत इति सर्वं

अनुभवहेतुः सकले, सद्यः समुपासिता(२) मनुजे।
साकांक्षाऽऽसन्ना च स्वार्थे योग्या सरस्वती देवी२॥

इतरा तावद्देवता सम्यगुपासिताप्युपासके न साकांक्षा, साकांक्षापि वा नासन्ना, आसन्नापि, वा न स्वस्योपासितुरभिलषितार्थे योग्या, योग्यापि वा, न समस्तोपासकेऽनुभवस्य जनिका,

---

सुस्थमधिकमन्यत्रानुसन्धेय, समुचितशब्दोपस्थितिं विना शब्दविवेचनैव न सम्भवतीति भावः॥

देवीपक्षे तु देवतान्तरापेक्षयाऽभ्यर्हितत्वादुत्कर्षवत्त्वाच्च समुचितत्व बोध्यमित्यग्रे व्यक्तीभविष्यति। पुरुषान्तरीयमंगलस्य ग्रन्थकर्तुर्विघ्नध्वसाहेतुत्वादिति। केचित्तु ग्रन्थकृदित्यनेनाभ्रान्तत्व सूचितमित्याहुः। तन्न तर्कतन्त्रज्ञ विदुषामित्यनेनैव तल्लाभात्। स्मरतिस्मेति-सस्मारेत्यर्थः स्मेनातीत इत्यनेनातीतकाले लटो विधानात्॥

स्मरणप्रकारमाह—अनुभवेत्यादिना—सरस्वती वाक्यरूपा, वाक्ये देवीत्वकथनादेव देवतान्तरापेक्षया उत्कर्षो वाक्यस्य प्रतीयते, तदेव स्फुटीकरोति---इतरा तावदिति—सम्यगिति सशब्दस्य विवरणं, सम्यगाराधितापीत्यर्थः। न साकांक्षा नार्द्रहृदया, नासन्ना न निकटवर्त्तिनी। स्वस्येति – स्वपदमात्मीयात्मोभयपरमिति भावः। अभिलषितार्थ इति – इच्छाविषयीभूत--मोक्षरूप इत्यर्थः। तथाचार्थपदमप्युभयतात्पर्यकमिति भावः। योग्या समर्था, उपासकाभिलषितार्थ इत्यनुषज्यते। न समस्तोपासकेऽनुभवस्य जनिकेति – स्वीयसमस्तोपासकवृत्तिस्वविषयकदर्शनजनिकेत्यर्थः। सद्यः पदस्य व्यतिरेकार्थमाह – जनिकापिवेति – अनुभवस्येत्यनुषज्यते। न सद्यस्तत्क्षणात्, एकविशेषनिषेधस्य विशेषान्तरविधायकत्वं व्युत्पत्तिसिद्धमतस्तदाह। किन्त्विति – मनुज-

जनिकापि वा न सद्यः, किन्तु कालक्रमेणैव, सरस्वती तु देवी सकलमनुज एव साकांक्षा आसन्ना योग्या चोपासिता (३) सती सद्य एवानुभवं तनुते, अतो देवतान्तरमपेक्ष्योत्कर्षवतीयमवश्यमुपास्येत्यत्र तात्पर्य्यम् ॥ २ ॥

॥३॥ अथ शब्दो यदि स्वार्थानुभवे भवेद्धेतुः(४)प्रात्यक्षिक एवौ-

---

इत्यस्य उपासके इत्यादिः--उपासिता गृहीता इत्यर्थः । आकांक्षादिवैशिष्ट्यञ्च स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे स्वरूपसदाकांक्षाया अनुपयोगित्वात्। यद्यप्यव्यवधानेनोपस्थितिरूपासत्तेःस्वरूपसत्या एव हेतुत्वात् तज्ज्ञान तत्र नोपयोगि, तथापि विषयतासम्बन्धेन तद्वैशिष्ट्य बोध्य। अथवा आसन्ना वृत्तिमती,वृत्तिज्ञानस्यावश्यकत्वात् आकांक्षासत्तियोग्यत्वैर्गृहीतेति--समुदितार्थ इत्यपि कश्चित्। ननु ग्रन्थकृता सरस्वती स्मर्यतां, तथापि तत्स्मरणात्मकस्योपासनस्य ग्रन्थादौ उपनिवन्धो व्यर्थ इत्यत आहात इति-उपास्या शिष्टै रिति शेषः। अनुभवः स्मृत्य-न्यज्ञानं, ज्ञानसामान्यपरत्वे "न चासौस्मृतिरित्युदीच्य- वितर्कासंगतेः "स्मृतिरूपत्वेऽपि पूर्वकारिकार्थावाधात् ॥ २ ॥

॥३॥ पूर्वकारिकोपोद्घातसगत्या कारिकान्तर मवतारयति-शब्दो यदीति—स्वार्थेत्यस्य वृत्त्या स्वोपस्थाप्यस्वार्थस्यानुभवे स्मृत्यन्यज्ञाने हेतुरित्यर्थः। साकांक्षादिशब्दश्रवणोत्तरं तदर्थासंसर्गाग्रहसहितं तदर्थोपस्थितिमात्र न तु विशिष्टानुभवः। न च तदुत्तरमस्तित्वेन गां शृणोमीत्यनुव्यवसायानुपपत्तिरितिवाच्यं, तत्र तस्यैव विवादास्पदत्वादित्याशयेन यदीत्युक्तं। प्रात्यक्षिक एवोपनायिक इति तत्रेत्यादिः—एव

---

(३) ज्ञातासती पदार्थोपस्थितिद्वारा सद्य एव शाब्द बोधं जनयतीत्यर्थः ॥

(४) पदार्थोपस्थितिद्वारेत्यादिः--तथाचातिरिक्तशाब्दरूपानुभवस्या प्रामाणिकतया प्रात्यक्षिकालौकिक एव, लौकिकसन्निकर्षस्य शब्दद्वारत्वाभावादिति ।

पनायिके, तत्र नाकांक्षाद्युपयोगः, तद्भिन्ने चेदानुमानिक एव, (५) न च तत्र सद्यः, साकांक्षत्वादिधीसामग्रीमात्रेण, (६) व्याप्तिबुद्ध्या-देरप्यधिकस्यापेक्षणादित्याशंकामपनेतुमन्वयबोधनामकमनुभवा-न्तरं दर्शयति ।—

## साकांक्षशब्दैर्यो बोध, स्तदर्थान्वयगोचरः । (७)
## सोऽयं नियन्त्रितार्थत्वा, न्न प्रत्यक्षं न चानुमा ॥३॥

मग्रेऽपि लौकिकप्रत्यक्षे शब्दस्यानुपयोगित्वात्, अतीन्द्रियस्थले तदस-म्भवाच्च। औपनायिक इति-उपनयात्मकसन्निकर्षजन्य इत्यर्थः। शाब्द-बोधात् पूर्वं पदज्ञानजन्यपदार्थोपस्थितेरावश्यकतया तस्या एवोपनय-सन्निकर्षत्वेन तत्रोपनीतभानस्वीकारे बाधकाभावादिति भावः।

नन्वेतावता शाब्दप्रमितिखण्डनेऽपि न पूर्वकारिकार्थायोग्यत्वं, पदार्थोपस्थितिद्वारा शब्दस्योपनीतप्रत्यक्षं प्रति हेतुत्वसत्त्वेऽपि उक्तका-रिकार्थासंगतेरित्यत उक्तकारिकार्थायोग्यत्व व्यञ्जयति, तत्र नेति-तत्र उ-पनीतप्रत्यक्षे। नाकांक्षायोग्यतासत्तीनामुपयोगः, तथाचाकांक्षादिमच्छ-ब्दस्य स्वार्थानुभव प्रति हेतुत्वाभिधानमसंगतमिति भावः। ननु तस्य प्रत्यक्षत्वे गौरस्तितावानितिवत् अस्तित्वं गवीयमित्यपि प्रत्यक्ष स्यात्, उपनीतयोर्विशेषणविशेष्यभावस्य कामचारादित्यत आह—तद्भि-न्नेऽपि चेदिति। ननु तज्जन्यबोधस्यानुमितित्वेऽपि न पूर्वकारिकार्था-

(५) आनुमानिक एव शब्दो हेतुर्भवत्वितिशेषः।

(६) मात्रपदेन तद्घटितसामग्रीतरान्यघटितसामग्रीव्यवच्छेदः।

(७) तृतीयार्थो जन्यत्व, अन्वयः सम्बन्धः। तथा च साकांक्षश ब्दजन्यसाकांक्षशब्दार्थसम्बन्धविषयताको यो बोधः स प्रत्यक्षातिरिक्तः सोऽपि प्रत्यक्षादिरेवास्तु इत्यत आह-नियन्त्रितेति, पदानुपस्थापितार्था विषयकत्वात् प्रत्यक्षादेः पदानुपस्थाप्यविषयकत्वेन व्यावर्तनात् ॥

अस्ति तावद्गौरस्ति, गामानयेत्यादिसाकांक्षशब्देभ्यः स्वस्ववृत्त्या पदार्थानामुपस्थित्युत्तरं गवादावस्तित्वादेरन्वयावगाही विलक्षणो बोधो, यत्रान्वयव्यतिरेकाभ्यामाकांक्षादिमत्तया शब्दस्यावगमो हेतु र्न तु पदार्थानामुपस्थितिमात्रं, विशिष्टमतेरानुभविकत्वादन्यथानुमितेरप्यपलापापत्तेः । (१) न चासौ स्मृतिः, समानाकार-

---

सगतिः, तत्राकांक्षादिमत्पदज्ञानस्य हेतुज्ञानविधयैव हेतुत्वसम्भवादतः पूर्वकारिकार्थायोग्यत्व व्यञ्जयति—न च तत्रेति—तत्रानुमितौ, सद्य इत्यस्य विवरणमाह--साकांक्षत्वादीति, मात्रार्थासत्वे हेतुमाह व्याप्तिबुद्ध्यादेरधिकस्येति -अनुमितौ व्याप्तिज्ञानादेर्हेतुत्वादितिभावः । अन्वयबोधनामकमिति--उपमितेरप्रामाणिकत्वात्, तथात्वेऽपि तत्र शब्दस्य हेतुत्वसम्भवाद न्वयबोधासत्त्वे पूर्वोक्तकारिकार्थस्य बाधितत्वादितिभावः ।

साकांक्षशब्दैरिति—आकांक्षादिमत्पदप्रयोज्यतत्तदर्थसंसर्गावगाही यो बोधः स नियन्त्रितार्थकत्वात् तादृशपदोपस्थाप्यस्यैवार्थस्यावगाहित्वात् न प्रत्यक्षोनानु मितिरित्यर्थः। न प्रत्यक्षमितिपाठः प्रामादिकः प्रत्यक्षशब्दस्य वाच्यलिंगत्वात् । प्रत्यक्षं ज्ञानमित्यपि कश्चित् । यत्तु प्रत्यक्षशब्दस्य ज्ञानविशेषबोधने वाच्यलिंगत्वं ज्ञानमात्रबोधने नपुसकत्वमिति मतं, तन्न ।

"प्रत्यक्षा मितिरेवात्र, नानुमा न च शब्दजा ।
योग्यसम्बन्धवत्त्वाच्च, बलवत्त्वाच्च सर्वतः ॥"

इति लीलावती प्रयोगदर्शनात् ।

साकांक्षपदजन्यपदार्थोपस्थित्युत्तरं विशिष्टबोध व्यवस्थापयन् प्रत्यक्षत्वादिविरुद्धं शाब्दत्व व्यवस्थापयितुं भूमिकामारचयन्नाह—

---

(१) वह्निमत्त्वेन पर्वतमनुमिनोमीत्यनुव्यवसायस्याप्रामाण्यत्वे तत् साधकप्रमाणाभावादिति भावः ॥

संस्काराप्रभवत्वात्, नापि साक्षात्कारः, साकांक्षपदेनैव प्रकारान्तरेणाप्युपस्थितार्थस्योपनयमर्य्यादयावगाहितापत्तेः, न चेष्टापत्तिरनुभवविरोधात्, (२) तदुत्तरं तथाविधानुव्यवसायापत्तेश्च ।

अस्ति तावदिति । अथैव दस्याप्रामाण्यवादिगुरुमते गौरस्तीत्यादितो नान्वयबोधोऽतो गामित्यादिना आनयेत्युपग्रहः, विलक्षणः पदानुपस्थाप्यार्थानवगाहीत्यर्थः ।

ननु तदानीं तादृशबोधस्य प्रामाणिकत्वेऽपि यादृशबोधे शब्दस्य हेतुत्वं भवतोक्तं, तादृशबोधो न प्रामाणिक इत्यतआह्-यत्रेति-तथाच तादृशबोध एव शब्दस्यहेतुत्व मयोक्तमितिभावः । न त्विति-असंसर्गाग्रहसहितमित्यर्थः । विशिष्टमतेरानुभविकत्वात्—अस्तित्वेन गां जानामीत्यनुव्यवसायसाक्षिकत्वादित्यर्थः । अन्यथा-विशिष्टज्ञानानुभवस्यास्वीकारे । अनुमितेरपीति-तथाच पर्वतो वह्निमानित्यनुमितिस्थलेऽपि वह्निं जानामि पर्वतं जानामीत्येवानुभवो न तु वह्निमत्तया पर्वतं जानामीत्याद्यनुभव इत्यस्यापि सुवचत्वादितिभावः ।

ननु विशिष्टमतेरानुभविकत्वेऽपि तत्र शब्दत्वजातौ किं मानं स्मृतित्वमेव तत्रोपगम्यते, नच शृणोमीत्यनुव्यवसायस्तत्र मानं, तस्य विवादग्रस्तत्वात्, अतः पारिशेष्यात् तत्र शाब्दत्वं साधयितुं स्मृतित्वादिसिद्धौ बाधकमभिधातुमाकांक्षते—नचेति—समानेति—तद्धर्मिकतद्वत्तास्मरणं प्रति तद्धर्मिकतद्वत्तासंस्कारस्य हेतुत्वात्, तस्य च तादृशबोधात् पूर्वं नियमतोऽसत्वादितिभावः ।

नन्वौपनायिकप्रत्यक्षत्वमेव तत्रोपगम्यते, तथा सत्यपि न पूर्वोक्त-

(२) पदोपस्थापितार्थविषयकत्वोपरागेणैव शब्दस्यानुव्यवसाय इति नियमभङ्गप्रसङ्गात्तत्तदर्थविषयकशाब्दत्वेनैव शाब्दप्रत्यक्षं प्रतिविषयस्य हेतुत्वादिति भावः । शङ्कते-तत्तदर्थविषयकेत्यादिना, तथाच प्रकारान्तरोपस्थापितार्थविषयकशब्दस्य तादृशपदान्यत्वाभावेन कारणविरहान्न तादृशानुव्यवसाय इति ॥

तत्तदर्थविषयकशाब्दमतेरनुव्यवसायं प्रति तत्तदर्थसाकांक्षपदजन्यतद्गोचरशाब्दत्वेन विषयविधया हेतुत्वकल्पनायामतिगौरवात् । इतरबाधलब्धस्य(१)छिद्रेतरत्वादेरपदार्थस्यापि अवगाहित्वेन शाब्दमतेरनुव्यवसीयमानत्वात्, गवादावस्तित्वादेरिवास्तित्वादावपि गवादेर्भानप्रसंगस्य तावताप्यनुद्धाराच्च (२) । अत एवासौ नानुमितिरपि, पूर्वपरामृष्टस्य वस्तुमात्रस्यैवासति बाधके शाब्दधीविषयतापत्तेः, न च तत्तदर्थगोचरशाब्दधियं प्रति साकांक्षपदजन्याया

---

कारिकार्थबाध इत्यत आह नापीति—साक्षात्कार इति = औपनायिक इत्यादिः=प्रकारान्तरेणानुमित्यादिना । अनुभवविरोधादिति पदोपस्थाप्यार्थावगाहिताया एवानुभवसिद्धत्वादितिभावः । अनुभवविरोधे विप्रतिपन्नं प्रत्याह—तदुत्तरमिति=इदञ्च वस्तुगतिमनुरुध्योक्त, अन्यथा तत्पूर्वमनुव्यवसायसामग्रीविरहादेव सुतरां तदुत्तरमित्यस्य लाभात् कथनवैयर्थ्यापत्तेः । लौकिकप्रत्यक्षविषययोः कार्यकारणभावसंकोचेन

---

(१) नन्वेतादृशापत्तिवारणार्थमेव तादृशं गौरवं स्वीकार्यमित्यतस्तादृशकार्यकारणभावे व्यतिरेकव्यभिचारं दर्शयति इतरेति ।=तथा च जलाहरणयोग्यो घटो न सच्छिद्र इतीतरबाधदशायां घटेन जलमाहरेदित्यादिवाक्यज-शाब्दानन्तर छिद्रेतरं शृणोमीत्यनुव्यवसाये तादृशाकांक्षादिमत्पदजन्यपदार्थोपस्थित्यविषयस्य छिद्रेतरत्वादेर्भानाद्व्यभिचार इतिभावः । ननु माभूत्तादृशवाक्याच्छिद्रेतरत्वादेर्बोधः किन्तु छिन्न, छिद्रेतरघटेन जलमाहरेदित्यादिवाक्यादेव तादृशबोधो भविष्यतीत्यत आह गवादाविति । तथाचालौकिकप्रत्यक्षे विशेष्यविशेषणभावस्यानियमेन गौरस्तीत्यादिवाक्यात् गोविशेष्यकास्तित्वादिप्रकारकस्यैवास्तित्वविशेष्यक–गोप्रकारकबोधोऽपि स्यात तत्साधकानुव्यवसायस्य सामग्रीसत्त्वादितिभावः ।

(२) पदार्थोपस्थित्यात्मकोपनायकज्ञानस्याविशेषादितिभावः ।

स्तत्तदर्थगोचरस्मृतेः कारणत्वकल्पनान्नैष दोषः, तावतापि पदार्थानामन्वयधीदशायामपदार्थानामपि स्वस्वसामग्रीबलेन प्रत्यक्षानुमित्योरन्यतरप्रसंगस्य दुर्वारतापत्तेः। शाब्दधियः प्रत्यक्षत्वाभ्युपगमे

---

तदनुव्यवसायं वारयन्नाह—तत्तदर्थविषयकत्वेनेति । गौरवादिति—ननु फलमुखगौरव न दोषायेत्यत आह—इतरवाधलभ्यस्येति—जलाहरणं न स छिद्रघटकरणक इतीतरवाधलब्धस्येत्यर्थः, तथाच व्यभिचारात् नोक्तकार्यकारणभावो वक्तुं शक्यत इतिभावः।

ननूक्तस्थले छिद्रेतरत्वज्ञानं विवादग्रस्तं, प्राचीनैः पदोपस्थाप्यस्यैव शाब्दधीविषयत्वोपगमात्। परन्तु इतरवाधवशात् घटत्वेन वस्तुगत्या छिद्रेतरघट एव भासते, अतो दूषणान्तरमाह–गवादाविति।–तावतापीति—तद्विषयकत्वेन शाब्दानुव्यवसायं प्रति तदर्थकपदजन्यतद्गोचरशाब्दत्वेन हेतुत्वोपगमेऽपीत्यर्थः। उपनीतयोः प्रत्यक्षे विशेषणतया भानस्य वाधादिप्रतिवन्धकाभावमात्रनियम्यत्वादितिभावः। अतएव—नियन्त्रितविषयत्वादेव। असौ उक्तलक्षणो बोधः। पूर्वेति–तादृशवोधात् पूर्वं, स्वव्याप्यवत् पक्षकत्वेन निश्चयाविषयस्य वस्तुसामान्यस्येत्यर्थः। वाधकसत्त्वे तत एव प्रतिवन्धकात्तादृशस्य वस्त्वन्तरस्य तत्र भान न सम्भवतीत्यत आह—असतीति।=वाधके प्रतिवन्धके परामर्शातिरिक्तकारणाभावे चेत्यर्थः। अतःपक्षताद्यसत्त्वदशायां तदापत्त्यसम्भवेऽपिन क्षतिः। शाब्दधीति-यद्यपि वैशेषिकैस्तत्र शाब्दत्वानभ्युपगमात् तन्मतदूषणस्य तन्मतानुसारेणैव दातुमुचितत्वाच्छाब्देत्यसगत । तथापि वस्तुगतिमनुरुद्ध्यैव तत्कीर्त्तनात्। न चानुमितित्वव्याप्यमेव शाब्दत्वमिति शाब्देति यथाश्रुतमेव सगच्छत इतिवाच्यं, तथा सति न चेत्यादिना पदार्थोपस्थितिकारणतासकोचेन तद्वारणप्रयासस्यात्यन्तासंगतेः। न चेति नैषदोष इति परेणान्वयः। तावतापि तादृशहेतुतास्वीकारेणापीत्यर्थः।

प्रत्यक्षादिसामान्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासम्भवात्, शाब्दान्यप्रत्यक्षत्वावच्छिन्नं प्रति तस्यास्तथात्वमपेक्ष्य शाब्दधियः प्रत्यक्षभिन्नत्वकल्पनायामेव लाघवान्मानाभावाच्च ॥ ३ ॥

॥ ४ ॥ अथ लिंगजत्वेनान्वयबुद्धेरनुमितित्वासिद्धावनायत्या

---

शाब्दत्वस्य प्रत्यक्षत्वादिव्याप्यत्वे पदोपस्थाप्यार्थावगाहिप्रत्यक्षादाविष्टापत्तिसम्भवादपदार्थानामिति-आपादकमाह स्वस्वसामग्रीति प्रत्यक्षानुमितिसामग्रीत्यर्थः । उक्तमतयोः प्रत्येकमते प्रत्येकापत्तिरित्या वेदनायान्यतरेत्युक्तं । ननु शाब्दबोधसामग्र्या प्रत्यक्षानुमितित्वावच्छिन्नप्रतिबन्धकत्वस्याभ्युपेयत्वान्न शाब्ददशायां प्रत्यक्षापत्तिरित्यत आह—शाब्दधिय इति ।=न च तादृशबोधे शाब्दत्वमेव न मन्यत इतिवाच्य, तदुत्तरं शृणोमीत्यनुव्यवसायस्य सर्वसिद्धत्वात्, अन्यथानुमित्यादेरप्यपलापापत्तेः, तथाच तत्र शाब्दत्वजातिस्वीकारे तस्याश्च प्रत्यक्षत्वादिजातिविरुद्धत्वे जित नैयायिकैरतः प्रत्यक्षत्वव्याप्यमेव शाब्दत्वमिनि वक्तव्यमिति तादृशप्रतिबन्धकत्वकल्पन न सम्भवतीति गूढाभिप्रायः ।

ननु शब्दाप्रयोज्यविषयताशालिप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्व वाच्यमतो नोक्तदोष इत्याशकते शाब्दान्येति । लाघवादिति=प्रतिबन्ध्यतावच्छेदकस्य गुरुशरीरत्वात्, पदार्थस्मृतेः स्वतन्त्रहेतुत्वकल्पनाच्चेति भावः । ननु प्रामाणिकं गौरवं न दोषायेत्यतआह—मानाभावादिति । न च तत्प्रकारकप्रत्यक्षहेतुरुपनय एव मानं, तस्य विशिष्टानुभवं प्रत्येव हेतुत्वात् ॥ ३ ॥

॥ ४ ॥ कारिकान्तरस्यावतरणिकामाह-अथेति=अनायत्येति=तथाचान्यथानुपपत्तेरेव प्रमाणत्वात् प्रामाणिकतया गौरवस्याप्यदोषत्वमितिभावः । अर्थगता इति अनुभाविकेति परेणान्वयः । एते योग्यताकाङ्क्षे । गौरस्तितावान् अस्तित्वयोग्यत्ववत्त्वादित्यनुमाने यद्येकपदा-

(१)शाब्दान्यानुमितौ तत्सामग्र्याः प्रतिवन्धकत्वं वाच्यमतो लिंगजत्वमेव शाब्दधियः खण्डयति—

**योग्यता(२)र्थगताकांक्षा, शब्दनिष्ठानुभाविका ।**
**प्रत्येकं वा मिलित्वा वा, नैते लिंगमसिद्धितः ॥४॥**

गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वादेर्वाधविरहित्वरूपं योग्यतामात्रं लिंगं, वाधनिश्चयाभावेनान्यथासिद्धस्य योग्यतार्थेऽपरपदार्थवत्त्वरूपयोग्यत्व हेतुः क्रियते, तदा साध्याविशेषः, तथासति नियमतः सिद्धिसत्त्वेन विनानुमित्सामनुमित्यसम्भव इत्यन्यविधां योग्यतां निरुप्यासिद्धिं सम्पादयति वाधविरहित्वरूपमिति । तथाचास्तित्वाभावाभाव एव तत्र हेतुरिति भावः । वाधनिश्चयाभावेनेति—वाधनिश्चयदशायां शाब्दबोधवारणाय योग्यतानिश्चयस्य हेतुत्वं स्वीक्रियते, निरुक्तयोग्यतानिश्चयस्य वाधज्ञानप्रतिवन्धकत्वात्, वाधनिश्चय एव शाब्दसामग्रीकाले न सम्भवतीति तादृशयोग्यतानिश्चयहेतुत्ववादिनामाशयः । स च न सङ्गच्छते, विशिष्टबुद्धिसामान्यं प्रत्येव वाधनिश्चयस्य प्रतिबन्धकत्वात्तदभावरूपकारणविरहादेव तदानीं शाब्दवारणसम्भवात्, योग्यतानिश्चयस्य हेतुताकल्पने प्रयोजनाभावादिति भावः ।

(१) ननु तस्यानुमितित्वेऽनुमितिं प्रति तत्सामग्र्याः प्रतिवन्धकत्वकल्पन मेवाशक्यमित्याहान्यायत्येति ।

(२) नन्वस्तित्वादिव्याप्ययोग्यतादिमान् गौरित्याद्याकारकयोग्यतादिज्ञानजन्यत्वेन गौरित्यादिशाब्दबुद्धेर्योग्यतादिलिंगकानुमितित्वमेवास्तु न तु पृथक् विजातीयशाब्दबुद्धिरूपधर्मिकल्पनमित्यर्थेत्यादिनाशंक्य तस्य लिंगजत्वखण्डनप्रयोजकत्वमाह—योग्यतेत्यादि । योग्यता अर्थादिरूपगवादिगता सती शाब्दबोधजनिका, आकांक्षा च शब्दनिष्ठासती अनुभवजनिकेत्यर्थः ॥

निश्चयस्यानावश्यकत्वात् । योग्यता (१) मात्रलिंगकसंसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्म्मत्वमित्यादिस्थलीयस्यापि तस्य तथा-

---

ननु इच्छाया उत्तेजकत्वानुरोधेन विशिष्टबुद्धिसामान्य प्रति बाधनिश्चयः प्रतिबन्धकः परोक्षज्ञानस्यानाहार्यत्वानियमेन तत्रेच्छाया अनुत्तेजकत्वात्, तथाच नानाप्रतिबध्यप्रतिबन्धकभावकल्पनस्यावश्यकत्वे शाब्द प्रति तस्य प्रतिबन्धकत्वमेव न कल्प्यत इति बाधनिश्चयाभावेन न तदन्यथासिद्धिरित्यत आह—योग्यतामात्रेति= केचित्तु, योग्यतानिश्चयस्य शाब्दाहेतुत्वेऽपि ज्ञायमानलिंगस्य करणत्वस्वीकारे योग्यताहेतुकानुमितिसम्भव इत्यतो दोषान्तरमाह-योग्यतामात्रेत्याहुः। तन्न, लिंगस्य करणत्वपक्षेऽपि परामर्शस्य हेतुताया आवश्यकतया योग्यताया अनिश्चयस्थले परामर्शविरहेणैव योग्यतालिंगकानुमित्यसम्भवात्। तस्य योग्यतालिंगकसंसर्गानुमानस्य। तथात्वापातादन्वयबुद्धित्वापातादित्यर्थः। यद्यपि शाब्दत्वस्यानुमितित्वव्यापकत्वाभावादुक्तापीत्तर्न सम्भवति, न हि व्यापकसत्त्वेन व्याप्यापत्तिसम्भवः व्यभिचारात्। तथापि वस्तुगतिमनुरुध्य इदमुक्तमेवमग्रेऽपि।

केचित्तु स्वरूपसद्व्यभिचारस्याकिञ्चित्करत्वादेकविधव्यभिचारग्रहसत्त्वेऽपि अन्यविधव्याप्तिज्ञानसम्भवाच्च तेन हेतुना तदापत्तिसम्भव इत्याहुः। तन्न, तथा सति अनुमानस्येत्यपहाय योग्यतालिंगकसंसर्गानुमानस्येत्युक्तेः सन्दर्भविरुद्धत्वापत्तेः, अस्माकन्तु अनुमितित्वस्य शाब्दत्वाव्याप्यत्वेऽपि योग्यतालिंगकसंसर्गानुमानस्य तद्व्याप्यत्वासंगतिरितिध्येय।

ननु तद्विषयकानुमितौ निराकांक्षतद्बोधकपदजन्यपदार्थोपस्थितेः स्वातन्त्र्येण प्रतिबन्धकत्वकल्पनात् नैष दोष इत्यत आह-योग्यतायाः

---

(१) विशिष्ट बुद्धिसामान्यं प्रति बाधनिश्चयाभावस्य हेतुत्वेन तेनैवान्यथासिद्धस्य गवादावस्तित्वरूपयोग्यताज्ञानस्य न पृथक हेतुत्वमिति भावः।

त्वापातात्, योग्यतायाः संशयस्थलेऽप्यन्वयबुद्धेरानुभविकत्वाच्च । गवादावस्तित्वादेरन्वयबोधानुकूलानुपूर्वीपर्य्यवसिता त्वाकांक्षा, स्वयमसिद्धा कथमस्तित्वादेरन्वयबोधं साधयेत् (१)? अत एवा(२) स्तित्वादेर्योग्यताविशिष्टमप्याकांक्षावत्त्वं गवादौ न तदन्वयस्यानुमापकमप्रसिद्धेः (३) ।

---

संशयस्थल इति ।=तथाच शाब्दबुद्धौ योग्यताज्ञानत्वेनैव हेतुत्वादनुमितौ तु हेतुमत्तानिश्चयस्यैव हेतुत्वाद्योग्यतासंशयस्थलीयान्वयबुद्धौ अनुमितित्वकल्पनासम्भवादितिभावः ।

नन्वाकांक्षैव तत्र हेतुरस्तु, तथा च गौरस्तिनायान्, तत्र तद्बोधकानुकूलाकांक्षावत्त्वादिति प्रयोगः, अतस्तस्य पक्षासत्त्वमाह-गवादावस्तित्वादेरिति ।--आकांक्षाया अन्यविधत्वे कदाचित् पक्षसत्व सम्भावनाविषय इत्यत आनुपूर्वीपर्यवसितात्विति । तथाचाकांक्षा न हेतुः, स्वरूपासिद्धत्वादितिभावः। अत एव केवलयोर्योग्यताकांक्षयोरहेतुत्वादेव । आकांक्षावत्त्वमिति —इदमुपलक्षण, आकांक्षाविशिष्टयोग्यत्वमपि बोध्यं, असिद्धे हेतुतावच्छेदकविशिष्टस्य हेतोः पक्षेऽसत्त्वादित्यर्थः । विशेष्यस्य पक्षेऽसत्त्वात्तदुभयोः सामानाधिकरण्यासम्भवाच्चेतिभावः । एतेन योग्यताशिष्टाकांक्षाहेतुत्वासम्भवेऽपि आकांक्षाविशिष्टयोग्यताया हेतुत्वानिराकरणे ग्रन्थकृतो न्यूनत्वमित्यपि प्रत्युक्तं ।

---

(१) अन्यथासिद्ध्यनिरूपकत्वस्वीकारेऽप्याह योग्यतेत्यादि ।

(२) गौरस्तीत्यादावव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णविशिष्टचरमत्वादिरूपानुपूर्वीविशेषरूपाकांक्षायाः शब्दादिनिष्ठत्वेन गवादिरूपपक्षेऽसत्त्वान्न तस्यालिंगत्व नवा साधकत्वमितिभावः ॥

(३) तथा च योग्यताया अर्थनिष्ठत्वेनाकांक्षायाः शब्दनिष्ठत्वेन च सामानाधिकरण्यसम्बन्धेन वैशिष्ट्याप्रसिद्ध्या नैकविशिष्टापरस्य हेतुत्वसम्भव इतिभावः ॥

अथ गौरस्तितावान्, स्वधर्मिकास्तित्वान्वयबोधानुकूलाकांक्षाश्रयपदस्मारितत्वात्, घटवत्, अस्तिपदसमभिव्याहृतगौःपदस्मारितत्वाद्वा, चक्षुर्वदित्याद्यनुमानत एवास्त्वन्वयधियोऽन्यथासिद्धिः। पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना

---

हेत्वन्तरवादिनव्यवैशेषिकमतमाशङ्क्य निषेधति-अथेति ।=स्मारितत्वहेतोर्व्यभिचारात् पदान्तमुक्तं। आकांक्षाश्रयपदस्मारितत्वस्यापि हेतुत्वे तद्दोषतादवस्थ्यात् अनुकूलत्वमाकांक्षाविशेषणं । अत्रापि स्वधर्मिकत्वानिवेशे अतीतघटादौ व्यभिचारः, अतःस्वधर्मिकेति बोधविशेषण। यद्यपि तदुपादानेऽपि भ्रमात्मकबोधमादाय तद्दोषतादवस्थ्य, तथापि तद्दोषस्य स्वयमाशंकनीयत्वात्। वस्तुतः पदस्मारितत्वमेव हेतुरन्यत् परिचायकं, अतएव पदस्मारितत्वाद्यभावग्रहदशायामितिदूषणग्रन्थोऽपि यथाश्रुत एव संगच्छते। व्यभिचारस्य तु स्वयमाशंकनीयत्वात्। अत एव तादृशबोधानुकूलपदस्मारितत्वस्यैव हेतुत्वसम्भवादाकांक्षाश्रयत्वमनतिप्रयोजनकमित्यपि प्रत्युक्त। तथा च यः स्वधर्मिकास्तित्वान्वयबोधानुकूलपदस्मारितः सोऽस्तितावान्, इतिसामान्यव्याप्तिमुक्त्वा विशेषव्याप्तिमप्याह अस्तीति ।=एतद्विशेषव्याप्तौ दृष्टान्तसम्भवात् न सामान्यव्याप्त्यपेक्षया जघन्यत्वमितिभावः।

अत्रापि गौःपदस्मारितत्वमेव हेतुरन्यत् परिचायकं । तथा च गौरस्तितावान् अस्तिपदसमभिव्याहृतगौःपदस्मारितत्वात्-चक्षुर्वदिति प्रयोगः। "दिङ्नेत्रघृणिभूजल" इतिकोषतश्चक्षुषोऽपि गोपदस्मारितत्वादितिभावः ।अन्वयधियः शाब्दबोधस्य। अन्यथासिद्धिरिति-इदञ्च प्रमितिखण्डनाभिप्रायेणोक्तं। शाब्दत्वस्यानुमितित्वव्याप्यहेत्वन्वयधिय इत्यस्यानुमितित्वविरुद्धशाब्दत्ववतो ज्ञानस्य इत्यर्थो द्रष्टव्यः।

ननु यत्र समभिव्याहृतत्वज्ञान नास्ति, तत्रापि शाब्दबोधोत्पत्त्या तत्रानुमितित्वकल्पनासम्भवात् कुतः प्रमितिखण्डन, शाब्दत्वस्यानुमि-

न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्वं तस्यावश्यकत्वात् । न च विनष्टे भाविनि वा घटे चक्षुरादौ व्यभिचारः, स्वार्थानुमाने स्वरूपसतस्तस्याकिञ्चित्कारत्वात्, एकविधव्यभिचारज्ञानसत्त्वेऽप्यन्यविधव्याप्तिनिश्चयस्य सम्भवाच्च, समानाकारस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वात्, इति नव्यवैशेषिकाः । तन्न, गवादेः पदस्मारितत्वाद्यभावग्रहदशायामुत्पन्नस्य गौरस्तीत्याद्यन्वयबोधस्यो-

---

तित्वव्याप्यत्व वा इत्यत आह-पदानामिति=न च, समभिव्याहृतान्तस्य परिच्चायकतया नैतद्दोषसम्भव इति वाच्यं, समभिव्याहृतत्वस्य विनष्टत्वेऽपि नैतद्दोषः सम्भवतीत्यभिप्रायेणैतदुक्तिरितिभावः । अत एव एकवाक्यतापन्नत्वज्ञानहेतुत्वस्य सर्वसम्मतत्वाभावेऽपि न क्षतिः । वस्तुतः समभिव्याहृतत्वस्यैवानिवेशादिति ध्येयं । उक्तव्याप्तिद्वये व्यभिचारमाशंक्य निषेधति नचेति —। पूर्वव्याप्तौ घटेऽपि व्यभिचार सम्भवे तदपहाय चक्षुः पर्यन्तानुसरणे न्यूनता स्यादतः प्रथमव्याप्त्यभिप्रायेण घटइत्युक्तं । उभयव्याप्त्यभिप्रायेण चक्षुरादाविति । आदिना स्वर्गादिपरिग्रहः । व्यभिचारोऽस्तित्वस्य वर्तमानकालसम्बन्धित्वरूपत्वादितिभावः । नञर्थे हेतुमाह स्वार्थानुमान इति- परार्थानुमानस्थले व्यभिचारसत्त्वे तदुद्भावनेन मध्यस्थानुमितिनिरोधः स्यादतःस्वार्थेत्युक्तं । ज्ञायमानस्य व्यभिचारस्य तत्रापि प्रतिरोधकत्वात् । स्वरूपसत — इति अज्ञातस्येत्यर्थः । तस्य व्यभिचारस्याकिञ्चित्करत्वात् व्याप्तिग्रहप्रतिरोधाक्षमत्वात् ।

ननु व्यभिचारस्य सत्त्वे कदाचित्तज्ज्ञानस्यापि सम्भवात् व्यभिचारज्ञानकालीनान्वयबुद्धौ अनुमितित्वकल्पनमसम्भवि, इत्यत आह-एकविधेति ।=सर्वत्रैवैकविधव्यभिचारग्रहकालेऽन्यविधव्यभिचारग्रहकल्पने मानाभावादितिभावः । नव्यवैशेषिका वदन्तीतिशेषः । उक्तहेतुना पदस्मारितत्वादिहेतुनेत्यर्थः ।

क्तहेतुनाप्यनिष्पत्तेः (१) पदजन्या हि पदार्थस्मृतिः स्वरूपसत्त्वेवान्वयबुद्धावुपयुज्यते, न तु ज्ञाता, प्रमाणाभावात्, पदैः (२) स्मारितस्यापि तत्स्मारितत्वग्रहदशायामन्वयधीप्रसंगाच्च। एतेन, गौःपदमस्तित्ववद्गोगोचरज्ञानपूर्व्वकम्, अस्तिपदसाकांक्ष-गौःपदत्वात्, यन्नैवं, तन्नैवं, यथाकाशमित्येवं पदपक्षकमप्यनुमानं, कणभक्षपक्षानुसारिणाम् (३) अपास्तं, गवादिपदानां ज्ञानपूर्वकत्वाद्यभावनिश्चय-

---

अनिष्पत्तेरिति--तथाच, प्रकृतहेतोः पक्षधर्मत्वाभावनिश्चयदशायां परामर्शानुत्पादेन तदानीमुत्पन्नस्यान्वयबोधस्यानुमितित्वं दुर्घटमितिभावः। ननु, शाब्दबुद्धौ पदजन्यपदार्थोपस्थितिज्ञानमेव हेतुरिति पदजन्यस्मृतिविषयत्वरूपस्य पदस्मारितत्वस्याज्ञानदशायां शाब्द एव न जायते इत्यत आह—पदजन्या हीति = स्वरूपसत्त्वेवाज्ञायमानैव। ननु, अन्वयव्यतिरेकाभ्यां पदार्थोपस्थितिज्ञानं हेतुर्भविष्यतीत्यतआह--प्रमाणाभावादिति = तथाच, तादृशान्वयव्यतिरेकयोरेवासिद्धिरिति भावः। तत्र, साधकाभावमुक्त्वा बाधकमप्याह—पदैरिति = वैशेषिकस्यानुमानान्तरमपि दूषयति एतेनेति, वक्ष्यमाणदोषेणेत्यर्थः, अपास्तमित्यन्वयः, अन्वयदृष्टान्तासम्भवात् यन्नैवमिति, जन्यवस्तुनः साध्यत्वं कदाचित्सम्भावनाविषय इत्याकाशमिति। ज्ञानपूर्वकत्वाद्यभावनिश्चयेति, तस्य सामान्याभावावगाहित्वेन साध्यवत्त्वाज्ञानविरोधित्व बोध्य ॥

---

(१) तथाच, पदस्मारितत्वाभावग्रहदशायामुक्तहेतुमत्तापरामर्शासम्भवादनिष्पत्तेरितिभावः।

(२) पदजन्यपदार्थस्मृतिज्ञानस्य हेतुत्वे दोषमप्याह-पदैरिति = तथाच, घटवद्भूतलमित्यादिशाब्दबोधे घटादिपदस्मारितस्य घटादेरपि घटादिपदस्मारितत्वभ्रमात्मकग्रहात्तादृशबोधे भानापत्तेरितिभावः।

(३) साध्यतावच्छेदकघटकविधया गवादावस्तित्वानुमानं पर्यवसानं कणादमतानुसारिणामित्यर्थः ॥

दशोत्पन्नस्य गवादिमुख्यधर्म्मिकास्तित्वाद्यन्वयबोधस्य, सार्वजनीनस्योक्तलिंगादप्यानिष्पत्तेः, वाक्यार्थस्यापूर्वत्वेन (१) तद्गर्भसाध्यस्य प्रायशः प्रागनुपस्थित्यानुमानायोगाच्च ।

वस्तुतो वाक्यार्थबोधस्यानुमितित्वे, सत्येव साकांक्षपदत्वादिलिंगकत्वं कल्प्यं, तदेव त्वसिद्धं, प्रमाणाभावात्, अस्तित्वेन गामनुमिनोमीत्यादेरनुव्यवसायस्य तत्रासत्त्वात्, प्रत्युत गौरस्तीति-

---

ननु, तदानीं शाब्द एव न जायत इत्यत आह – सर्वजनानुभवेति = क्वचित्सार्वजनीनेतिपाठः, स च समानार्थकः। ननु, तस्य सर्वजनानुभवसिद्धत्वमेवासिद्धमित्यतो दोषान्तरमाह – वाक्यार्थस्येति = अपूर्वत्वेन-पूर्वाग्रृहीतत्वेन, तद्गर्भसाध्यस्य तद्घटितसाध्यस्य, अनुवादकस्थले-वाक्यार्थस्यापूर्वत्वाभावात्, प्रायश इत्युक्त। केचित्तु, प्रायश इत्यस्यानुमाना योगादित्यत्रान्वयः, तथाचानुमितेः पूर्वं वाक्यार्थस्यानुपस्थित्यापि, प्रत्येकपदार्थोपस्थित्या इतरबाधस्थल इव विशेष्यविशेषणमितिन्यायेनैवानुमितिसम्भवादित्याहुः ॥

यद्येकपदार्थेऽपरपदार्थवत्त्वं योग्यता, तदाऽपूर्ववाक्यार्थस्थले नैयायिकैरपि शाब्दबोधानभ्युपगमात् दोषान्तरमाह-वस्तुत इति = ननु, योग्यतासंशयोऽपि शाब्दहेतुरितिचेत्, योग्यतानिश्चय एव हेतुरिति यदि ब्रूते, तदा, नैतद्दोषः सम्भवतीत्यभिप्रायेण वस्तुत इत्यादिना दोषान्तरदानं । अनुमितित्वे सत्येवेति – अयमाशयः, अयं बोधः, किञ्चिल्लिंगजन्योऽनुमितित्वादित्यनुमानाल्लिंगजन्यत्वं साधनीयं, तथाच, लाघवज्ञानादिवशात् पदस्मारितत्वादिलिंगजन्यत्वं सेत्स्यति,

---

(१) वाक्यार्थस्यास्तित्ववद्गवादेरनुमानात्पूर्वमज्ञातत्वेनास्तित्ववद्गोगर्भसाध्यस्य कदाचिज्ज्ञातत्वेन प्रायश इत्युक्त, तथाचास्तित्ववद्गवादि रूपवाक्यार्थस्यापूर्वत्वेनास्तित्ववद्गोज्ञानगर्भसाध्यस्यानुमानासम्भवइतिभावः ॥

वाक्यादस्तित्वेन गौः श्रुतो नत्वनुमित इत्यनुभवाच्च, श्रोतव्यो (१) मन्तव्य इत्यादिप्रयोगदृष्ट्या शाब्दत्वस्यापि श्रृणोतेः शक्यतावच्छेदकत्वात् । न चासौ भ्रान्तिर्बाधकाभावात् । (अन्यथा) न चेदेवमनुमितिमात्रस्य पदजन्यत्वं प्रकल्प्य, अन्वयबोधत्वं किमिति न रोचयेः? अनुमिताविवान्वयमतावपि समानविषयकप्रत्यक्षसामग्र्यादेः प्रति-

---

तच्च न सम्भवति, अनुमितित्वहेतोः स्वरूपासिद्धत्वादिति । नन्वस्तित्वेन गामनुमिनोमीत्यनुव्यवसाय एव तत्र प्रमाणं भविष्यतीत्यत आह — अस्तित्वेनेति = तत्रासत्त्वात्तत्रसत्त्वस्यैवाप्रामाणिकत्वात् । साधकाभावमुक्त्वा बाधकमप्याह — अस्तित्वेन गौःश्रुतोनत्वनुमित इति =

ननु मुख्यप्रयोगाभावात् शाब्दत्वस्य श्रुधातोः शक्यतानवच्छेदकत्वात्तादृशानुव्यवसाय एवासिद्ध, इत्यत आह — श्रोतव्य इति = शाब्दविषयः कर्तव्य इतितदर्थः । असौ उक्तानुव्यवसायः, भ्रान्तिरिति शाब्दत्वांशे भ्रम इत्यर्थः । बाधकाभावात् प्रमात्वबाधकाभावादित्यर्थः । केचित्तु, बाध एव बाधकः, स्वार्थे कप्रत्ययः,तथाच शाब्दत्वस्य तत्राबाधादित्यर्थः । भ्रमत्वस्य तदभावविशेष्यकत्वघटितत्वेन बाधनिश्चयत्वादितिभावः । एतेन साधकाभावसम्भवे तदपहाय बाधकाभावकथने ग्रन्थकृतो न्यूनत्वमित्यपि प्रत्युक्तमित्याहुः । ननूक्तानुव्यवसाय एव विवादग्रस्त इत्यत आहान्यथेति = तादृशानुव्यवसायस्यापलाप इत्यर्थः । अनुमितिमात्रस्येति वह्न्याद्यनुमितेरपि, वह्न्याद्यनुमितिः वह्न्यादिपदजन्या, वह्न्याद्यनुमितित्वात्, इत्यनुमानेन पदजन्यत्वं प्रसाध्यते तेनैव हेतुनान्वयबोधत्वं तव किं नेच्छाविषय इति समुदितार्थः । नन्वनुमितौ समानविषयकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वात्तदभाव-

---

(१) ननु, श्रुधातोः शब्दप्रत्यक्षादेरेव शक्यतावच्छेदकत्वेन कथ गौःश्रुत इत्यनुव्यवसायस्य गौरस्तीतिशब्दानुकूलत्वमत आह श्रोतव्य इत्यादि ॥

